च सति सखण्डस्य दण्डादेः स्वरूपतोऽभानात् तत्त्वादिविशेषणविशिष्टस्यैवावच्छेदकलक्षणस्थस्वपदेनोपादेयतया तद्विशिष्टाविषयकप्रतीतिविषयत्वस्य दण्डत्वादिविशिष्टस्य सुघटत्वाद्यापकतावच्छेदकत्वमव्याहतमेवेति चेन्न पारिभाषिकस्यावच्छेदकत्वस्य स्वत्वघटितत्वेनाननुगतस्याभावकूटज्ञानासम्भवेन प्रतियोगितायाः स्वरूपसम्बन्धरूपावच्छेदकत्वस्यागत्या गुरुधर्मसाधारण्यमङ्गीकृत्य व्याप्तिलक्षणे तदेव निवेशनीयम् एवं च सामानाधिकरण्यसम्बन्धेन महानसीयत्वादिविशेषणावच्छिन्नस्य वह्नित्वादेः हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वेऽपि महानसीयत्वादिविशिष्टनिरूपितसमवायादेरेव प्रतियोगितावच्छेदकताघटकसम्बन्धत्वं तत्रोपेयते शुद्धसमवायादिना वह्नित्वादेरतिप्रसक्तत्वात् शुद्धसमवायादेस्तदवच्छेदकतावच्छेदकसम्बन्धत्वे महानसीयत्वादिसामानाधिकरण्योपलक्षितवह्नित्वाद्यवच्छिन्नाभावात्तद्विशिष्टवह्नित्वाद्यवच्छिन्नाभावस्य वैलक्षण्यानुपपत्तेश्च तथा च साध्यतावच्छेदकताघटकशुद्धसमवायादिना ऽखण्डवह्नित्वादेरनवच्छेदकत्वं न दुर्लभं न च महानसीयत्वादिसामानाधिकरण्यस्य यत्रोपलक्षणता तत्र तस्यावच्छेदककोटौ न प्रवेशः यत्र विशेषणत्वं तत्र तत्प्रवेश इत्यत एव वैलक्षण्यमिति वाच्यम् उपलक्षणीभवत्तत्तद्धर्मावच्छिन्नप्रतियोगितावच्छेदकताकाभावबुद्धावपि तत्तद्रूपस्य प्रतियोगितावच्छेदकांशे प्रकारतया भानात् तत्रावच्छेदकत्वमानस्यावश्यकतया ऽवच्छेदकशरीराप्रवेशरूपोपलक्षणताया उपलक्षणविधयाऽवच्छेदके तत्रासम्भवात् यदुपलक्षितनिरूपितसमवायादेरवच्छेदकताघटकसम्बन्धत्वं तस्योपलक्षणविधया अवच्छेदकत्वं यद्विशिष्टनिरूपितसमवायादेरवच्छेदकताघटकसम्बन्धत्वं तस्य विशेषणविधयाऽवच्छेदकत्वमित्यस्यैव विशेषत्वात् एवं च एकत्वप्रागभावविशिष्टघटादेः संयोगसम्बन्धेनाभावस्य प्रतियोगितायामप्रसिद्धतया विशिष्टनिरूपितसंयोगादेरवच्छेदकत्वासम्भवेनागत्या विशेषणविधया प्रतियोगितावच्छेदकत्वस्यान्यथैव वैलक्षण्यस्योपपादनीयतया शुद्धसमवायादेरेव विशिष्टसत्ताद्यभावप्रतियोगितावच्छेदकसम्बन्धतया तादृशाभावस्य तादृशसम्बन्धेन प्रति-

योगिसमानाधिकरणतया दीधितिकृतां प्रतियोगितावच्छेदकविशिष्टासामानाधिकरण्यपर्यन्तनिवेशव्यावृत्तिसङ्गतिः । माभूद्वा विशिष्टनिरूपितसमवायत्वादिना प्रतियोगितावच्छेदकताघटकसम्बन्धता तथापि महानसीयत्वादिसामानाधिकरण्योपलक्षितवह्नित्वादेस्तद्विशिष्टवह्नित्वादेश्च प्रतियोगितावच्छेदकतयोर्भेदेन वैलक्षण्यम् आद्या तद्धर्मावच्छिन्ना विशेष्यमात्रपर्याप्ता अन्त्या च विशेष्यविशेषणभावापन्नयोर्धर्मधर्मिणोर्द्वयोः पर्याप्तैवं रीत्यैवोपपादनीयं तावतापि अखण्डस्य शुद्धवह्नित्वादेर्हेतुमन्निष्ठाभावप्रतियोगितानवच्छेदकत्वमुपपद्यते धर्मान्तरोपलक्षितवह्नित्वाद्यवच्छिन्नाभावस्य धूमादिमत्यवृत्तेर्विशिष्टवह्नित्वाद्यवच्छिन्नाभावप्रतियोगितावच्छेदकतायाश्च विशेषणान्तर्भावेनैव पर्याप्तेः तत्त्वोपलक्षितदण्डावच्छिन्नप्रतियोगिताकहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकता च तत्तावच्छिन्ना शुद्धविशेष्य एव पर्याप्ता साध्यतावच्छेदकताघटकशुद्धसंयोगसम्बन्धावच्छिन्ना चेति तादृशसम्बन्धेन दण्डादेस्तादृशाभावप्रतियोगितानवच्छेदकत्वं दुरुपपादमिति वदन्ति । वस्तुतो गुरुधर्मस्य प्रतियोगितानवच्छेदकत्वे पारिभाषिकावच्छेदकत्वं निवेशनीयं तच्छरीरे यादृशं स्वं निविष्टं तादृशधर्मभेदनिवेशे वह्नित्वादौ विशिष्टवह्नित्वादिभेदासत्त्वेन तादृशधर्माविषयकप्रतीतिविषयत्वं निवेशनीयमिति गौरवमतः प्रतियोगितावच्छेदकं यादृशयादृशरूपं स्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितावच्छेदकतत्कत्वरूपं तत्तदतिरिक्तवृत्तित्वमेवानवच्छेदकान्तेन विवक्षणीयं तथा च सर्वासामेव दण्डादिव्यक्तीनां हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकतया कस्याश्चिदपि दण्डादिव्यक्तेर्न यावत्प्रतियोगितावच्छेदकातिरिक्तवृत्तित्वं स्वस्य स्वातिरिक्तवृत्तित्वविरहादिति अखण्डधर्मस्य व्यापकतावच्छेदकतानुसरणम् । एतच्च एकोक्त्यभिप्रायेण यथाश्रुतमूललक्षणमुपपादयन्तं सार्वभौमप्रभृतिमतमनुसृत्य एकोक्त्यनादरे तु अनुगतरूपेण नानाव्यक्तिविधेयतावच्छेदकानुमित्यौपयिकव्याप्तिर्यद्रूपावच्छिन्नमनवच्छेदकं यद्रूपं वा ऽवच्छेदकतानवच्छेदकं तद्रूपविशिष्टावच्छिन्नसामानाधिकरण्यं तद्रूपविशिष्टावच्छिन्ननिरूपिता व्याप्तिरित्यादिरीत्या निर्वचनीया तथा सति दण्डिसंयोगादिहेतुकापि दण्डिमानयमित्याकारिकानुमितिर्विशेषदर्शिनामपि निर्वहति एवमेको-

त्त्या प्रतियोगिताधर्मिकोभयाभावघटिताया ग्रन्थकारेण स्व-यमुपदर्शनीयाया व्याप्तेरपि दण्डत्वादिविशिष्टदण्डाद्यवच्छिन्ननिरूपितत्वनिर्वाहः हेतुसमानाधिकरणविशेषाभावप्रतियोगितायां द-ण्डत्वपृथिवीत्वव्याप्यजातित्वादिविशिष्टावच्छेद्यत्वाभावस्याव्याहतत्वात् दण्ड्यादिसामान्याभावप्रतियोगिताया मेव तद्धर्मविशिष्टनिरूपितविलक्षणावच्छेद्यत्वसत्त्वादिति ध्येयम् ॥

( दी० ) इत्थं च इदं द्रव्यं गुणकर्मान्यत्वे सति सत्त्वादित्यादौ सत्त्वाद्यधिकरणगुणादिनिष्ठात्यन्ताभावप्रतियोगित्वेऽपि द्रव्यत्वादेर्नाव्याप्तिः । साधनस्य विशिष्टसत्तादेर्गुणादावृत्तेः ।

(गा०) इत्थं चेति हेतुतावच्छेदकोपलक्षितहेतुसामानाधिकरण्यसाधारणरूपमुपेक्ष्य विशिष्टसामानाधिकरण्यत्वेन सामानाधिकरण्यनिवेशे चेत्यर्थः नाव्याप्तिरिति न विशिष्टसत्तात्वरूपहेतुतावच्छेदकविशिष्टवैशिष्ट्यावगाहिज्ञानजन्यानुमित्यौपयिकव्याप्त्यनिर्वाह इत्यर्थः तेन विशिष्टसत्तात्वाद्युपलक्षितहेतुमत्ताज्ञानजन्यानुमित्यौपयिकव्याप्तौ तदुपलक्षितहेतुसामानाधिकरण्यमेव निविष्टमिति लभ्यते अतो द्रव्यत्वाद्यभावे तादृशहेतुसामानाधिकरण्यसत्त्वात्तादृशे हेतौ न द्रव्यत्वादेर्व्याप्तिरित्यभ्रान्तानां गुणादौ विशिष्टसत्तात्वाद्युपलक्षितहेतुमत्ताज्ञानसम्भवेऽपि न तत्र द्रव्यत्वाद्यनुमित्यापत्तिः यत्र घटपटवृत्तिसंयोगत्वादिना हेतुना घटपटाद्यन्यतरत्वं साध्यं तत्रोभयवृत्तित्वविशिष्टाधिकरणाप्रसिद्ध्या हेतुतावच्छेदकोपलक्षितहेतुसामानाधिकरण्यगर्भव्याप्त्यन्तरमवश्यं स्वीकरणीयमन्यथा तद्धेतुकतत्साध्यकानुमित्युच्छेदप्रसङ्गात् ईदृशव्याप्त्यन्तरानभ्युपगमे सादृश्यहेतुकानुमितिरप्युच्छिद्येत तुद्भेदसामानाधिकरण्यसहिततद्वृत्तिधर्मत्वरूपसादृश्यत्वविशिष्टाधिकरणाप्रसिद्ध्या विशिष्टाधिकरणतागर्भव्याप्त्यसम्भवात् । अथैवं विशिष्टवैशिष्ट्यावगाहिज्ञाने विशिष्टनिरूपितसमवायस्य सम्बन्धतया तेन सम्बन्धेन व्याप्तिर्हेतुतावच्छेदकसम्बन्धेन हेतुमत्त्वस्याग्रे विवक्षणीयतयैव निर्वहतीति कथमत्र विशिष्टपदोपादानं न च विशिष्टवैशिष्ट्यबोधे विशिष्टनिरूपितसमवायत्वादिना न विशेषणसम्बन्धता अपि तु शुद्ध एव